**सर्ववेदशाखासभायां श्रीकरपात्रस्वामिनः महासिद्धान्तपक्षः ,का० शु ० त्रयोदशी संवत २०२१/ नवम्बर १९६४**

**युधिष्ठिरः** - मन्त्रब्राह्मणयोर्वेदनामधेयम् ' इति वचनबलादेव ब्राह्मणानां यद्वेदत्वम् , तद्धि केवलं कृष्णयजुर्वेदीय - श्रौतसूत्रेष्वेव , न ऋग्वेद - यजुर्वेद - सामवेदीय - श्रौतसूत्रेषु । निर्वृत्त प्रयोजनमिदं वचनमेषु सूक्तेषु । यतो हि - वेदत्रयस्य मन्त्रसंहिताः स्वतन्त्राः पृथक् पठयन्ते , ब्राह्मणानि च स्वतन्त्राणि पृथक् । एवञ्च प्राचीनपरम्परानुसारं कृष्णयजुर्वेदमन्त्र - ब्राह्मणयोः सम्मिश्रणात् तदेक देशानां मन्त्राणामेव वेदसंज्ञा प्राप्ता , न ब्राह्मणानाम् । अत एव सूत्रस्यास्य व्याख्यायां हरदत्तेन धूर्तस्वामिना च स्पष्टमुल्लिखितम- " कैश्चिन्मन्त्राणामेव वेदत्वमाश्रितम् " इति । अतः स्पष्टमेतत् प्रतोयते यत्प्राचीनैरनेकैः आचार्यः मन्त्राणामेव वेदत्वमङ्गीकृतम् , न ब्राह्मणानाम् । कश्चित् स्वाकृतेऽपि वचनस्यास्य प्रामाण्ये आपस्तम्बादिश्रौतसूत्र - परिभाषाप्रकरणपठितत्वादस्य सा पारिभाषिक्येव संज्ञा भवेत् । सा च प्रतिशास्त्र प्रातिस्विकी पृथगेव । यथा पाणिनेः ' अ - ए ओ ' वर्णानां गुणसंज्ञा । लोके न्यायादिशास्त्रेषु वा ' गुण'शब्देन न ' अ - ए - ओ ' वर्णानां ग्रहणम् । स्पष्टमेतत् यत् ऋग्वेदादौ मन्त्राणां ब्राह्मणानाञ्च पूर्णतया पार्थक्यम् ।

**श्रीकरपात्रचरण::**- कात्यायनभिन्नैः ऋषिभिर्वेदसंज्ञाया अस्वीकृतत्वादिति - स्वामिदयानन्दोक्तिविरोधात् । एतद्रीत्या कात्यायनमहर्षिणा ब्राह्मणानां वेदत्वमङ्गीक्रियते । कात्यायनश्च शुक्ल यजुर्वेदीयो न कृष्णयजुर्वेदीयः । परमेतदुक्तिरपि न सङ्गता , ब्राह्मणानां बेदत्वबोधकवचनान्तराणामभावेऽपि परमाप्तस्य श्रौतसूत्रकारस्य कात्यायनस्य वचनमेव तत्र पर्याप्तम् ।

मन्त्रब्राह्मणयोर्वेदनामधेयमिति वचनं बौधायनगृह्यसूत्रे ( २।६|३ ) , बौधायनधर्मसूत्रे ( २६/७ ) , आपस्तम्बश्रौतसूत्रे ( २४।१।३१ ) , सत्याषाढश्रौतसूत्रे ( २११७ ) , कात्यायनपरिशिष्ट प्रतिज्ञासूत्रे , ( २ ) च समायाति । एवं पारस्करगृह्यसूत्रे ' वेदं च समाप्य स्नायात् ' इत्यत्र ' विधिविधेयस्तकश्च वेदः ' इत्युक्तम् । अत्र विधेयो मन्त्रः , विधिस्तर्कश्च ब्राह्मणम् । एवमृग्वेदीये कौशिकगृह्यसूत्रे ' मन्त्रब्राह्मणयोर्वेदशब्दः ' ( ३।१२।२३ ) , अथववेदीये कौशिक - सूत्रे च ' आम्नायः पुनर्मन्त्राश्च ब्राह्मणानि च ' इत्युक्तम् । एवं शुक्लयजुर्वेदीय - प्रातिशाख्ये ' स्वरसंकारयोश्छन्दसि नियमः ' ( १२२२ ) इति सूत्रे उक्तम् - ' ब्राह्मणेऽपि स्वरविधानात् ब्राह्मणभागस्य मन्त्रत्वम् । ' प्रातिशाख्यप्रतिज्ञासूत्रे ' ब्राह्मणे तूदात्तानुदात्तौ भाषिकस्वरौ ' ( ८ ) इतिसूत्रेण ब्राह्मणेऽपि स्वरविधानाद् ब्राह्मणानां वेदत्वमुक्तम् ॥

यत्तु ' कैश्चिन्मन्त्राणामेव वेदत्वमिष्यते ' इति हरदत्तधूर्तस्वामिवचनेन मन्त्राणामेव वेदत्वमिति पक्षसमर्थनं तदपि तुच्छमेव , कौत्सादिभिर्ब्राह्मणानामेव वेदत्वोपगमनेन तुल्यत्वात् । तादृश मतमेकदेश्येव न सार्वदेशिकमिति तूभयत्र समानमेव , वादिप्रतिवादिसम्मतैर्व्यास - जैमिनिपाणिनिपतञ्जलिगोतमकणाद वात्स्यायनादिभिर्मन्त्रब्राह्मणयोरुभयोरपि वेदत्वाभ्युपगमान्मुख्यमेतयोर्वेदत्वम् ॥

यदपि च ' मन्त्रब्राह्मणयोर्वेदनामधेयम् ' इति कात्यायनश्रौतसूत्रस्य प्रतिज्ञापरिशिष्टे परिभाषाप्रकरणेऽसत्त्वात् कात्यायनेन मतान्तरप्रदर्शनार्थमेव लिखितम् इति , तदपि पलायनमात्रम् , परिभाषाप्रकरणे तल्लेखेऽपि तस्य पारिभाषिकत्वेन सङ्कुचितत्वस्य वक्तुं शक्यत्वेन परिभाषाप्रकरणाभावेन तस्य सार्वत्रिकत्वाय तदन्यत्रोल्लेखस्यौचित्यात् । ' एके ' , ' केचित् ' इत्यादिप्रयोगादर्शनेन तस्य अन्यमतप्रदर्शनोक्तिरपि निर्मूलक । कथञ्चित् परमतत्वेऽपि ' अप्रतिषिद्धं परमतमनुमत भवति ' इति न्यायेनानुमतमेव कात्यायनस्य भवति , अन्यथा वादिनेव खण्डितमेव स्यात् ।

**युधिष्ठिर:-** ' एवमिमे सर्वे वेदा निर्मिताः सकल्पाः सरहस्याः सब्राह्मणाः सोपनिषत्काः सेतिहासाः सपुराणाः ' ( गोपथब्रा ० १।२।१ ) इत्यत्र न वेदशब्देन ब्राह्मणानां ग्रहणं सम्भवति , पृथग् ब्राह्मणग्रहणवैयर्थ्यापातात् ।यत्र वक्तृश्रोत्रोवशिष्ठस्य ब्राह्मणत्वं ज्ञातं भवति तत्रैव ब्राह्मणवशष्ठि - न्यायप्रवृत्तिः । तथैव यदि वशिष्ठस्य ब्राह्मणेतरत्वमेव निश्चितं स्यात्तदा नास्य न्यायस्य प्रवृत्तिः , तथैव यदि ब्राह्मणग्रन्थाना वेदत्वेन स्वीकृतिः स्यात्तदैव तन्न्यायप्रवृत्तिः । ब्राह्मणग्रथेषु च ब्राह्मणग्रथो वेदोऽस्तीति नोक्तम् , तस्मान्नात्र न्यायस्य प्रवृत्तिः यदपि ' सछात्रो गुरुरागतः , सपुत्रः पिता ' इतिवत् सकल्पाः सरहस्या इत्यत्र ' सहयुक्तेऽप्रधाने ' ( पा ० सू ० २।३।१ ९ ) इति तृतीयाविधायकसूत्रेण वेदापेक्षया ब्राह्मणादीनामप्राधान्यावगमो भवति॥

**श्रीकरपात्रचरण:** - इत्यापि न मनोज्ञम् , ब्राह्मणपरिव्राजकन्यायेन वशिष्ठब्राह्मणन्यायेन दा तत्र समाधानसम्भवात् । तथा च सपरिव्राजका ब्राह्मणाः सवशिष्ठा ब्राह्मणा आयाता इतिवत् सब्राह्मणा वेदा इति प्रयोगे बाधाभावात् । यथा ब्राह्मणविशेष एव परिव्राजको भवति , ब्राह्मणविशेष एव वशिष्ठः प्रसिद्धः । तत्र ब्राह्मणे परिव्राजकस्य वशिष्ठस्य वा वैशिष्ट्यद्योतनायैव तथा प्रयोगः सम्भवति , तथैव

ब्राह्मणस्य वैशिष्ट्यद्योतनायैव पार्थक्येन ब्राह्मणग्रहणम् । ब्राह्मणस्य नियोक्तृत्वेन राजस्थानीयत्वेन मन्त्राणां विनि योज्यत्वेन प्रजास्थानीयत्वात् ।

यदुक्तम् "यत्र वक्तृश्रोत्रोवशिष्ठस्य ब्राह्मणत्वं ज्ञातं भवति तत्रैव ब्राह्मणवशिष्ठ - न्यायप्रवृत्तिः" सर्वत्र वैदिकेषु मन्त्रेषु ब्राह्मणेषु च वेदत्वं पारम्पर्येणैव निश्चितम् । बुद्धिप्रयत्नानपेक्षत्वेन निःश्वासस्याकृत्रिमत्ववन्मन्त्रब्राह्मणादीनां परमेश्वरस्य निःश्वसितत्वेनाकृत्रिमत्वाच्चापौरुषेयत्व वेदत्वं च सिद्धमेव । एवमिमे वेदाः सब्राह्मणा इति प्रयोगदर्शनेन सन्दिहानस्य ब्राह्मण विशिष्ठन्यायेन समाधानम् । यदि कश्चिद् वेदरामायणमहाभारतादिसिद्धब्राह्मण्यतच्छ्रेष्ठत्वस्य । ब्राह्मणस्यापि वशिष्ठस्य ब्राह्मणेसरत्वं मनुते , तथाप्यास्तिकं प्रति भवत्येव ब्राह्मणवशिष्ठन्यायस्य प्रवृत्तिः । ' वेदाः सब्राह्मणाः ' इत्यत्र सब्राह्मण इति विशेषण स्याऽनुपपत्त्या ब्राह्मणस्य वेदाद् भिन्नत्वं सिषाधयिषति । ब्राह्मणपरिव्राजकन्यायेन ब्राह्मणवशिष्ठन्यायेन वा विशेषणस्यो पपत्याऽनुपपत्तिनिवारितेति न तदनुपपत्त्या ब्राह्मणभिन्नत्वं सिद्धयति । ब्राह्मणस्य वेदाद् भिन्नत्वं सिद्धं स्याञ्चेत् तदा तत्सिषाधयिषया प्रमापकत्वेनोक्तवचनस्योपादित्सा न स्यात् । यत्तक्तवचने ' सकल्पाः सरहस्याः ' , आदिपदैः सह यत् , स , इति पदं श्रुतम् , तद् वेदापेक्षया ब्राह्मणग्रन्थस्य हीनत्वं द्योतयति ' इति , तदपि ब्राह्मणविषयकदूषितबुद्धिविलसितम् । " तृतीयाविधायकसूत्रेण वेदापेक्षया ब्राह्मणादीनामप्राधान्यावगमो भवतीति , तदपि यत्किञ्चित् , ' देव्या हते तत्र महासुरेन्द्रे सेन्द्राः सुरा वह्निपुरोगमास्ताम् ' इत्यादौ इन्द्रस्य प्राधान्यवद् ब्राह्मणादीनां प्राधान्यावगमेऽपि बाधाभावात् ' ऋचः सामानि जज्ञिरे ' ( वा ० सं ० ३१।७ ) ' उच्छिष्टाजज्ञिरे सर्वे दिवि देवा दिविश्रितः ' ( अथर्व ११।९ ।२४ ) , ' पुराण यजुषा सह ' ( अथर्व . ११।९ ।२४ ) इत्यत्र त्वद्रीत्या पुराणापेक्षया प्रधानेऽपि यजुषि तृतीयादर्शनात् । ॥

**युधिष्ठिर:-** सेतिहासाः सपुराणाः ' इत्यादिपदेषु कल्पसूत्रेतिहासपुराणप्रथाना निर्देशात् तेषा च वादिभिः पौरुषेयत्व स्वीकाराद् अपौरुषेये च ब्राह्मणवाक्ये पौरुषेयग्रंथाना निर्देशासम्भवाच्च ब्राह्मणानां पौरुषेयत्वमेव ।

**श्रीकरपात्रचरण-** पौरुषेयस्यापि पुराणादेरुत्कर्षः सम्भवत्येव । अपौरुषेये मन्त्रे ब्राह्मणे च तत एव तदुल्लेखः सम्भवत्येव , पृथिव्यादीनामिव पुराणादीना प्रतिकल्पं सत्येन प्रवाहरूपेण नित्यत्वेनापौरुषेये मन्त्रे ब्राह्मणे च तद्वर्णने बाधानुपपत्तेः । अभ्युपगम्य चेद समाधानमुक्तम् ।

**युधिष्ठिर:-** "मन्त्रब्राह्मणोवेदनामधेयमिति कल्पसूत्रातिरिक्त वेदपदस्य लक्षणं किम्?

**श्रीकरपात्रचरण:-** सम्प्रदायाविछिन्नत्वे सति अस्मर्यमाणकर्तृत्वं वेदत्वम्॥

**युधिष्ठिर:-** स्वरहीनस्य गोपथादिब्राह्मणस्य न वेदत्वम् "कल्पसूत्राधिकरणे" असन्निबंधनत्वात् (1.3.12) इति सूत्रे "स्वाराभावात् विवक्षितम्। विभाषा भाषायाम् (पाणिनी 6.1)

**श्रीकरपात्रचरण :-** शतपथतैत्तिरीय - तरेयादिवत् गोपथादि - ब्राह्मणस्या , सस्वरत्वानुमानात् । यथा अनेकासां शाखानां लोपः , कासाञ्चिद् ब्राह्मणलोपः कासाञ्चिद् मन्त्रसहिता - लोपः , तथैव केषाञ्चिद् ब्राह्मणानां स्वर लोपोऽपि । न च स्वरलोपेन वेदत्वलोपो भवतीति वक्तुं शक्यम् । न च शस्त्रपाठे वेदत्वं नास्तीति वक्तुं शक्यम् । तत्र ' यज्ञकर्मण्यजपन्यूङ्खसामसु ' ( पाणिनी. १/२/३४) '

इत्येकश्रुतिविधानात् । स्वरसामान्या भावश्च एकश्रुतिः । तथा च रेखात्मकस्वराभावेऽपि वैदिकाः परम्परानुसारेणैव गोपथादीन् पठन्ति । तत्र चोच्चारणं स्वराप्रतिकूलमेव । शृङ्गपुच्छादिवैकल्येऽपि गोर्गोत्ववत् ' एकदेशविकृतमनन्यवदिति न्यायन कुत्रचित् स्वरसम्प्रदायलोपेऽपि वेदत्वमक्षुण्णमेव । अत एव स्वरापराधेऽपि न मन्त्रे मन्त्रत्वहानिः । स्वरसत्त्वे साङ्गत्वेन शक्तिशालिबम विपरीतस्वरत्वे वाग्वनत्वेन यजमानानिष्टकारित्वञ्च । स्वरहीनत्वे किञ्चिद्धीनशक्तित्वमेव । तदुक्तं पाणिनीयशिक्षायाम् ' मन्त्रो हीनः स्वरतो वणतो वा मिथ्याप्रयुक्तो तमर्थमाह। ( पा ० शि ० ५२ ) वर्णव्यत्ययेन तु आनुपूर्वीनाशाद् वेदत्वापगम एव , वर्णपदानुपूर्वाविशेषस्यैव वेदत्वात ।

**युधिष्ठिर :-** माध्यन्दिनीयसंहितापदपाठस्य सम्प्रदायाविच्छेदे सति अस्मर्यमाणकर्तृत्वेऽपि वेदत्वमपौरुषेयत्वं च नास्ति "

**श्रीकरपात्रचरण:-**तस्यापि अवश्यस्मर्तव्यत्वाभावेन व्यभिचारात् । मन्त्र संहिताब्राह्मणानामेव च पौरुषेयत्वे कर्तुरवश्यस्मर्तव्यता उता । नहि खलु पदपाठज्ञानस्य साक्षाद् वाक्यार्थ ज्ञाने उपयोगः , पदार्थस्मरणहेतुत्वेन तस्य अन्यथासिद्धत्वात् ।

**युधिष्ठिर:-** ' संहिताया एव नित्यत्वं पदविच्छेदस्य तु पौरुषेयत्वम् ' ( पा . ३।१।१०९) इति पदपाठस्यानित्यत्वं कैयटेनोक्तम् । यश्च नागेशेन 'पदपाठस्य सम्प्रदायभ्रंशोऽजीकृतः । यद पतञ्जलिना ' न लक्षणेन पद कारा अनुवाः , पदकैर्नाम लक्षणमनुवयम् ' इति कथितम् "।।पदपाठस्य अपौरुषेयत्वे यास्कदोषदर्शनमयुक्तम्(निरुक्त ६/२८/३)

**श्रीकरपात्रचरण:**- पदपाठापौरुषेयत्वे यास्कप्रभृतीनां मतभेदेन तदपपत्तेः । यथा जैमिनीयरीत्या वेदानामपौरुषेयत्वेऽपि गौतममहर्षि दृष्टया तेषामीश्वरकर्तृकत्वेन पौरुषेयत्वं तथा यास्कदृष्टया पदपाठस्य पौरुषेयत्वमेव । तथापि ' वाचा विरूपनित्यया ' इति विरुद्धत्वात् यथा गोतमसम्मतमपि पौरुषेयत्व नायिते , तथैव पूर्वोक्तश्रुतिविरुद्धत्वात् यास्कोक्तिरपि नातव्या । श्रुत्यनुसारी निरुक्तार्थस्तु - ' वा ' ' यः ' इति चकार शाकल्यः , ' वा ' ' या ' इति पदपाठं प्रवर्तयामास । तत्र यद्यपि आख्यातस्य उदात्तत्वापत्तिः , अर्थश्चासुसमाप्तो भवति , तथाप्यापौरुषेयपदपाठस्य अपर्यनुयोज्यत्वेन तत् समाधानमहनीयमिति शेपः । अदृष्टविशेषार्थो वा तथा पदपाठः इति वा शेषः । नागेशयोः वैदिकर्मतभेदेन तदप्रामाण्यात् । एकदेशिय एव ।

**युधिष्ठिर:** - तन्न, "संहिताया एव नित्यत्वं पदविच्छेदस्य तु पौरुषेयत्वम् इदं तु ६,८ अध्याये वर्णितम्। यदुक्तम् वर्धमान: "तत्र भवतां वेदविदामलंकारभूतेन भृतहरिणा"।।

**श्रीकरपात्रचरण:**- यथा वैयाकरणनां निकाये घटादिशब्दनामानुपूर्वीविशिष्टानामपि नित्यत्वं तथैव मीमांसकानां राद्धान्ते वेदवाक्या नामपि नित्यत्वम् । नागेशकैयटादयोः घटादिशब्दानामिव वैदिकवाक्यानां नित्यत्वं नाङ्गीकुर्वन्ति । वैदिकानामुक्तसिद्धान्तो महाभाष्यकारेणान्यत्र समर्थितः । तथा हि - 'मतौ छः सूक्तासाम्नोः ' ( पाणिनी ५/२/५९)) इत्यन्त्र भाष्यम् - ' स्वरो नियत आम्नायेऽस्यावामशब्दस्य । वर्णानुपूर्वी खल्वप्याम्नाये नियत । ' ' अस्यवाम ' ( ऋ

. सं .१।१६४।१ ) इत्युपलक्षणम् , आम्नायपदवाच्ये सर्वस्मिन्नपि मन्त्र ब्राह्मणात्मके वेदे वर्णानुपूर्वी नियता एकरूपा भवति । प्रवाहरूपेण नित्या भवतीत्यर्थः । इदमेव सिद्धान्तभाष्यम् । एतद्विरुद्धास्तदक्तय एकदेशिय एव । '"

**सायं पञ्चवादने सूर्यास्तघोषणा।।**